# VIMSATI-VIMŚIKĀ

BY

## HARIBHADRA-SŪRI

हरिभद्रसूरिकृता

## विंशतिविशिका

*Edited*

***With Sanskrit Introduction Sanskrit rendering Notes in English and an Appendix***

BY

**K V ABHYANKAR, M A,**

*Professor of Sanskrit and Ardha Māgadhī,*
*Gujarat College Ahmedabad*

—

**1932**

—

**Price Rs 2**

श्रीहरिभद्रसूरिभि प्रणीता

# विंशतिविंशिका



'अहमदाबाद' नगरान्तर्गत 'गुजरात कॉलेज' नाम्नि विद्यालये संस्कृतार्धमागधीभाषाध्यापकेन

## अभ्यंकरोपाह्व–वासुदेवतनूज–काशीनाथेन

गीर्वाणभाषाच्छायाप्रस्तावनापरिशिष्टैराङ्ग्लभाषा टिप्पणीभिश्च सहिता

संशोधिता प्रकाशिता

---

प्रथमा आवृत्ति । प्रतय ५००

---

पुण्यपत्तने
आर्यभूषणमुद्रणालये मुद्रितम् ।

शके १८५४ सवत् १९८९

मूल्य २–०–०

# विषयानुक्रमणिका

# ॥ प्रास्ताविकं निवेदनम् ॥



१ श्रीमद्भिर्हरिभद्राचार्यैर्विरचितानामावश्यकदशवैकालिकादिवृत्तीनामवलोकनप्रसङ्गेनैतेषां ग्रन्थलेखनपद्धत्या सिद्धान्तप्रतिपादनशैल्या विविधशास्त्रग्रन्थपरिचयेन च सुचिरं मे मनसि कुतूहलमासीदाचार्याणां षड्दर्शनसमुच्चयशास्त्रवार्तासमुच्चययोगबिन्दुधर्मसंग्रहण्यादीनामितरेषामपि ग्रन्थानामवलोकने तत्तद्ग्रन्थप्रतिपादितविविधसिद्धान्तपर्यालोचने च। षोडशकपञ्चाशकधर्मसंग्रहणीप्रभृतीनां ग्रन्थानां स्थितेऽपि प्रत्येकं विचारप्रागल्भ्ये विंशतिविंशिकाप्रकरणे समीचीनतयाऽऽचाराध्यात्मयोगादयस्तत्र तत्र सूत्रनिर्युक्तिचूर्ण्यादिग्रन्थेषु विस्तरेण प्रतिपादिता सर्वेऽपि सिद्धान्ता एकत्र समथिता समदृश्यन्त, तस्य च ग्रन्थस्य पठनपाठनादिक्रियया लघीयसा प्रयत्नेन गरीयः कार्यमध्यापकाध्येतॄणां संपादितं स्यादिति मनसि विधाय हस्तलिखितपुस्तकावलोकनपूर्वं तस्य संशोधने मुद्रणे च मतिमकरवम्। बहुदुर्लभत्वाद्धस्तलिखितग्रन्थानां मनोरथमात्रमेवास्य ग्रन्थस्य संपादनसंकल्पः स्थितः स्यादिति शङ्का सुदीर्घकालं मनसि कृतपदाभूत्। परमधुना राजनगर (अहमदाबाद्) सुरतलिंबडीपट्टणस्थग्रन्थभाण्डागाराधिकारिणां हस्तलिखितग्रन्थसमर्पणादिसाहाय्यमस्य ग्रन्थस्य सामीचीन्येन संपादने प्रोत्साहकमभूत्स्वल्प एव काले परिनिष्पन्नमस्य संपादनकर्म ॥

२ विंशतिकाप्रकरणविंशतिविंशतिकाप्रकरणेत्यपरनामधेयाया अस्या विंशतिविंशिकाया उपरि न काचन टीकोपलभ्यते। केवलं योगविंशिकानाम्न्याः सप्तदश्या विंशिकाया उपरि उपाध्याययशोविजयजीमहाशयैः कृता टीकोपलभ्यते मुद्रिता च कतिपयसंवत्सरेभ्यः प्राक्पण्डितैः सुखलालजीमहाशयैः। समग्रस्य ग्रन्थस्योपर्यपि उपाध्याययशोविजयजीमहाशयैः टीका लिखिता स्यादित्यनुमानमेव। नाद्यावधि अवलोकनपथमायाता समग्रा टीका। हस्तलिखितपुस्तकेषु सुरतनगरीस्थपुस्तकमितरेभ्यः सकाशाद्दीर्घच्छिन्नं, सर्वेष्वेव बहुविधा लेखनप्रमादा दृश्यन्ते, कृतेऽपि च सुप्र-

इति प्रयत्ने कानिचित्स्थलानि न समाधानपूर्वकं व्याख्यातुं पारितानि । केवलमुचितार्थप्रकल्पनाप्रदान एव यत्नः कृतो यथाकालं च सुधिया बुद्धिवैभवशालिना सकाशादुचिततराणि व्याख्यानान्यपेक्ष्यन्ते । यतो यथामति वृत्तग्रन्थसंपादनकर्मापि परिनिष्पन्नं महतांशेन हस्तलिखितपुस्तकसांनिध्याद्, अतो यैर्महाशयैर्हस्तलिखितानि प्रेषितानि तेषामत्र भयानस्य ग्रन्थसंपादनस्य श्रेयोभागः । विशेषतस्तु स्वयंचिकीर्षितसंपादनस्यास्य ग्रन्थस्य स्वनिष्पादितसामग्रीं गलमकाशं प्रेषयद्भिः प्रवर्तककान्तिविजयप्रशिष्यैः पुण्यविजयजीमहाशयैः पण्डितसुखलालजीमहाशयैश्चातितरामुपकृतमत्र कर्मणि ॥

२ हरिभद्रसूरिभिश्चतुश्चत्वारिंशदधिकचतुर्दशशतसंख्याका ग्रन्था रचिता इति यद्यपि प्रसिद्धिश्चिरन्तनप्रवादस्तथापि मुद्रितानाममुद्रितानां चैतेषां ग्रन्थानां गणनैषा न पञ्चविंशत्यधिका ग्रन्थाः सांप्रतं समुपलभ्यन्ते, तेषु च टीकाप्रकरणदर्शनकथारूपाश्चत्वारो विभागाः प्रामुख्येन संदृश्यन्ते । दशवैकालिकावश्यकप्रज्ञापनानुयोगद्वारनन्द्यादिष्वङ्गबाह्येष्वेवागमसूत्रेषु तास्विकानां आचारप्रतिपादकेभ्यो भिर्वृत्तयो लिखितास्तथा चागमबाह्येषु पञ्चवस्तुपञ्चसूत्रचैत्यवन्दनासूत्रेष्वप्येषां वृत्तय उपलभ्यन्ते, प्रकरणग्रन्थेषु धाष्टकषोडशकविंशिकापञ्चाशकसंबोधप्रकरणधर्मबिन्दुधर्मसंग्रहणीश्रावकप्रज्ञप्त्यादयो धर्माचारव्याख्यानरूपा अनेकान्तजयपताकालोकतत्त्वनिर्णयषड्दर्शनसमुच्चयशास्त्रवार्तासमुच्चयादयः स्वपरदर्शनव्याख्यानपरा बहवो ग्रन्था दृश्यन्ते तथा च योगबिन्दुयोगदृष्टिसमुच्चयादयो योगशास्त्राधिकृताः प्रामुख्येनावलोक्यन्ते । धर्मकथाग्रन्था अपि समरादित्यकथोपदेशपदादय एभिर्व्यरच्यन्त तथा च दिङ्नागाचार्यकृतन्यायप्रवेशवृत्तिरप्येभी रचितेति प्रसिद्धिः । स्वसमयोपलब्धास्ते ते बौद्धग्रन्था अप्येभिः सूक्ष्मन्यायेनालोकिता इति दृश्यते, वसुबन्धुकृतविंशिकात्रिंशिकाग्रन्थयोः कदाचिद्विंशतिविंशिकेति प्रस्तुतग्रन्थस्य नामकरणे स्फूर्तिरासीदेतेषां मनसीति भाति ।

३ यद्यप्युपलब्धानामागमग्रन्थटीकाकृतां शीलाङ्कशान्त्याचार्याभयदेवानां मध्ये हरिभद्राचार्या एव गीर्वाणभाषाया टीकाविरचने नितरां

प्राचीना —आदिमा इत्युच्येत तर्ह्यपि नानुचितं स्यात्—तथाप्यङ्गसूत्राण्य-पाकृत्येतरसूत्रेष्वेवैतेष्टीका व्यरचीति नूनमीषच्चमत्कृतिकरम्। स्याद्वाङ्गग्रन्थानां निरतिशयपावित्र्यभावना वा तदर्थसार्थस्याप्रतिहतव्याख्यानपरंपरागतस्य लोकानां पर्याप्त परिचयो वा निर्युक्तिचूर्णिभाष्यादिप्राक्तनटीकानां सत्त्वे वा तत्र कारणम्। चतुश्चत्वारिंशदधिकचतुर्दशशतग्रन्थकर्तृत्वप्रवादो न ग्रन्थसंख्यया किं तु प्रकरणसंख्यया व्याख्येय इति भाति।

५ हरिभद्राचार्याणां जीवनवृत्तान्तो विस्तरेण प्रभाचन्द्रकृतप्रभावकचरिते तथा चोपदेशपदटीकायां निवेदितो दृश्यते तदनुसारेणैते सूरयश्चित्रकूट (चितोड)प्रदेशगता या जात्या ब्राह्मणाः पारदृश्वानो वेदशास्त्राणां जैनसिद्धान्ते समुत्पन्नश्रद्धा आचार्यपदमलंकारयाञ्चक्रुः। परमविद्वांसोऽमी अधिगतवेदशास्त्रार्थरहस्या अपि याकिनीनाम्न्या महत्तरया प्रोक्ताया एकस्या गाथाया ( चक्किदुगं हरिपणगं पणगं चक्कीण केसवो चक्की। केसव चक्की केसव दु चक्की केसव चक्की य॥ ) अथज्ञानेऽस्खलितमतयो बभूवुस्तस्याः सकाशाच्चार्थज्ञानं लब्ध्वा समुत्पन्नजिनमतादरा जिनसमयानुसारेण दीक्षामगृह्णन्सिद्धान्तं च जैनं सम्यगधीत्य विविधान्वृत्तिग्रन्थान्प्रकरणग्रन्थांश्च विरचयामासुः। स्वोपज्ञग्रन्थेषु सिताम्बराचार्यतया जिनदत्तशिष्यतया जिनभद्रनिगदानुसारितया चात्मानमेते उल्लेखयन्ति धर्मतो याकिनीमहत्तरासूनुशब्देनात्मानं व्यपदिशन्ति।

६ श्रीमतां हरिभद्राचार्याणाममीषां कालनिर्णयस्तु निश्चितत्वेनाद्यापि न निर्णीतः। अमीभी रचितेषु ग्रन्थेषु न कुत्रापि स्वसमयोल्लेखः कृतः। केवलं प्रसङ्गतस्तेषां तेषां ग्रन्थानां ग्रन्थकाराणां च निर्देशत इतरग्रन्थकारैः कृतादमीषां च निर्देशादेव साधारणतः कालविचारः कर्तुं शक्यते। बहवश्च लोकप्रवादा अमीषां सूरीणां समयविषये श्रूयन्ते। समयसुन्दरप्रभृतयः "पञ्चसए पणसीए(पणतीए इति पाठः)विक्कमकालाउ झत्ति अत्थमिओ। हरिभद्दसूरिसूरो भवियाण दिसउ कल्लाणं॥" इत्येवंरूपां पुराणगाथां निर्दिश्य ५८५ (५३५ पाठानुसारेण) सन्निमितं समयं सूचयन्ति। तपागच्छगुर्वावल्यां परिदृश्यमानः

'अभून् गुरुः श्रीहरिभद्रमित्रं श्रीमानदस्तत्र सूरिः' इति श्लोको विक्रमषष्ठशतकस्यमानत्वाभिमतया हरिभद्राचार्यनिर्दिष्टसमयमेव समर्थं दृढीकरोति। एतदनुसन्धानाभावे केवलं तल्लिखितगतप्रमाणानि पुनः षष्ठ शतकसमयमन्तरेण समुत्पादयन्ति सुमहान्तं संशयम्। तथा हि सिद्धसेनदि वाकरधर्मकीर्तिभर्तृहरिकुमारिलभट्टप्रभृतीनामतीव वचसु स्पष्टतयोपलभ्यमा नोनिर्देशास्तथा च वासवदत्ताप्रियदर्शिकादीनां ग्रन्थानां नामतः कथनं नैव षष्ठशतकसमयकल्पनया सङ्गच्छेत। हरिभद्रनामधारिणां चतुर्णां ग्रन्थकर्तॄणां मध्ये विरहशब्दाङ्कितसुप्रसिद्धहरिभद्राचार्यव्यतिरिक्तस्य कस्या- प्यासु गाथासु निर्देशः स्याच्चेदविरहितविक्रमाष्टमशतकस्य कस्यापि गुणाग्र्य शक्यो वाऽत्र निर्दिष्टः स्यादित्यत्र समाधानसाधनम्॥

७ आवश्यकादिसूत्रटीकाग्रन्थेषु पञ्चाशकविंशतिविंशिकादिप्रकरणेषु तथा च समरादित्यकथापदर्शपदादिषु तेषु तेषु ग्रन्थेषु सर्वत्र न केवलं मन्ते किन्तु क्वचित्क्वचिन्मध्ये प्रकरणान्तेषु च विरहशब्दः प्राचुर्येणा- वलोक्यते। तदवलोकनाच्च किल पञ्चाशकादिग्रन्थकारा विरहाङ्ककवि नाम्नैतान्निर्दिशन्ति। एते रचितासु दशवैकालिकाद्यागमटीकासु निर्युक्ति चूर्णिविशेषावश्यकभाष्यादीनां स्पष्टतया निर्देशास्तत्र तत्र दृश्यन्ते, दर्शन- ग्रन्थेषु च सिद्धसेनदिवाकरधर्मकीर्तिकुमारिलभट्टकृताः श्लोका उद्धृता दृश्यन्ते, अतो निर्विवादमेतदवधेयं विक्रमसप्तमशतादनन्तरमेवाभूवन्। 'न सोऽस्ति प्रत्ययो लोके' इत्यादि श्लोकाः वाक्यपदीयादुद्धृतानेकान्त जयपताकायाम्। तथा च 'कालो सहाव' इत्यादिका गाथा विंशति- विंशिकायां परिदृश्यमाना सिद्धसेनदिवाकरकृतसन्मतिसूत्रादुद्धृता, षड् दर्शनसमुच्चये च परिदृश्यमानः कल्पनापोढमभ्रान्तमिति श्लोकः प्रायो धर्मकीर्तिन्यायात्समुद्धृतः। एतेऽन्ये चेतरे श्लोका उपरिनिर्दिष्टानां ग्रन्थ- कर्तॄणां ग्रन्थेभ्य उद्धृता सुधीभिर्विभावनीयाः। इतरग्रन्थेषु हरिभद्राचार्या

अनेकेषु स्थलेषु दृश्यन्ते येषु च प्राधान्येन विक्रमसंवच्चतुर्दश राचन्द्रगणिना प्रभावकचरिते विस्तरशोभीया जीवनवृत्तान्त च समत्सरदर्शनत्व द्विषष्ठिशतीतिमित सिद्धर्षिभी रचिता

यामुपमितिभवप्रपञ्चकथायाममीषां स्वधर्मगुरुत्वेनोल्लेखः कृतः “ आचार्यहरिभद्रो मे धर्मबोधकरो गुरुः । प्रस्तावे भावतो हन्त स एवाद्ये निवेदितः ॥ विषं विनिर्धूय कुवासनामयं व्यचीचरद्यः कृपया मदाशये । अचिन्त्यवीर्येण सुवासनासुधा नमोऽस्तु तस्मै हरिभद्रसूरये ॥ अनागतं परिज्ञाय चैत्यवन्दनसंश्रया । मदर्थैव कृता येन वृत्तिर्ललितविस्तरा ” इति श्लोकत्रयेण । अत स्पष्टमेवैतद्यदेतेषां जीवनसमयः कुमारिलभट्टेभ्योऽनन्तरं सिद्धर्षिभ्यः प्राग्विक्रमसंवन्नवमशतकारम्भाद्दशमार्धपर्यन्तं ( ८००–९५० ) यत्र कुत्रापि ॥

८ उपरिनिर्दिष्टैरन्तर्गतैर्बहिर्गतैश्च प्रमाणैर्यदि हरिभद्रसूरीणां कालमर्यादा विक्रमशकस्य नवमशतकात्प्रभृति दशमार्धशतकपर्यन्तं निर्णीयते तदा शङ्कराचार्येभ्यः प्राक्पश्चाद्वा हरिभद्रसूरयोऽभवन्निति विचारः समापतति । शङ्कराचार्याणां ग्रन्थेषु न कुत्रापि हरिभद्राचार्याणां नामनिर्देशो ग्रन्थनिर्देशो वा दृश्यते न च हरिभद्रकृतेषु ग्रन्थेषु शङ्कराचार्याणाम् । निर्देशाभावादेव हरिभद्राचार्याः शङ्कराचार्येभ्यः पूर्वमभूवन् यदि पश्चादभविष्यंस्तदा शङ्कराचार्यनामनिर्देशमप्यकरिष्यन्निति विचारसरणिस्तु न सम्यक्प्रमाणपदवीमधिरोहति अनवगमकत्वादभावमूलकानामेवंविधानां प्रमाणानाम् । प्रत्युत षड्दर्शनधर्मसंग्रहण्यादिषु भूतवैचित्र्यसिद्धि भूतचैतन्योत्पत्ति– क्षणिकत्वनिरास– बाह्यार्थसिद्धि – समवायनिरासादिप्रकरणेषु ( धर्मसंग्रहणी श्लोक ६५–६७,८६,७८,१६८,३१०, ३२८–३३० ) परिदृश्यमाना विचारसरणिस्तथा शारीरभाष्यविचारसरणिमनुकरोति यथा शारीरभाष्यं हरिभद्रसूरिदृष्टिपथावतीर्णमासीदिति प्रतिपादने सति प्रागल्भ्यमाभाति । तथा च योगबिन्दुगताभाससंवादस्याङ्कितोऽपि मण्डनमिश्रेतिपूर्वाश्रमस्थनामधेयानामाभासवादप्रतिपादकाग्रेसराणां सुरेश्वराचार्याणां पश्चाद्धरिभद्रसूरयोऽभवन्निति विचारं सञ्जनयति । दिङ्मात्रमेतत्प्रदर्शितमस्मानया विचारसरण्या तत्र स्थानस्थितग्रन्थानां सूक्ष्मबुद्धिपरिभावनेन सुधियोऽस्मिन्विषये अधिकनिर्णयमाप्तुं प्रयतन्तामित्यपेक्षया । यद्युपरिनिर्दिष्टप्रकारेण हरिभद्रसमयः शङ्कराचार्यसुरेश्वराचार्यसमयादनन्तरं

दशमशतकारम्भे स्थाप्येत तदा “ आचार्यहरिभद्रो मे धर्मबोधकरो गुरु ” इत्याद्य सिद्धर्षिकृतश्लोका अपि संगृहीता भवन्तीत्यधिकतरं चारुताकारणम् । विषयेऽस्मिन्नधिकविचारालोचनादिपूर्वकं करिष्यते यथावसरं प्रपञ्च ॥

९ ‘ इयन्त्यनशनसप्तके एकदिनेन न्यूने व्यपगते शककाले चैत्रस्य कृष्णपक्षे चतुर्दश्या ’ लिखितायां कुवलयमालायां विरहकविनाम समरादित्यकथाकर्तुरन्वसो यदि स्वीकृत स्यात्तर्ह्युपरिष्टान्निर्दिष्टा विचारसरणि र्बाध्येत शंकराचार्यस्य पूर्वं च हरिभद्राणां कालो निर्णीयेत, परंतु सप्तदशमशतकाधसमये रचितायामुपमितिभवप्रपञ्चकथायां सिद्धर्षिभिर्धर्मगुरुत्वेन कृतस्योल्लेखस्य प्रामाण्याय दत्तास्तिलाञ्जलि स्यात् । सत्स्वेवंविधेषु परस्परं विरुद्धेषु प्रमाणेषु केवलमन्तर्गतबहिर्गतप्रमाणद्विकानुरोधेन यदि समयो निर्णीत स्यात्तर्हि स एव प्रामाणिकतम स्यात् । साक्षाद्दृष्टान्तर्गतप्रमाणानुरोधेन कुमारिलभट्टानामनन्तर परम्परया चान्तरप्रमाणानुरोधेन शंकराचार्यसुरेश्वराचार्याणां च पश्चात् नवमदशमशतकार्ध एते समभवन्निति निष्कंप प्रतिभाति । कुवलयमालायामुल्लेखित शको गताब्दिकशको भाति शालिवाहनशकाब्दसंवत्सरस्य फाल्गुनमासपर्यवसायित्वात् ॥

१० प्रतिभाविलासे विविधदृष्टान्तप्रदान आगमादिग्रन्थोपस्थितावसर शास्त्रदर्शनादिग्रन्थानां परिचये विविधशब्दप्रयोगकौशल्ये च हरिभद्राचार्या इतरेभ्यो न केनापि गुणलवेन हीना । साधकबाधकप्रमाणानामुत्तरोत्तरक्रमश प्रतिपादने पूर्वपक्षोत्तरपक्षपूर्वकव्याख्यानपद्धतौ हेत्वाभासादिप्रहाणे नानुमानादिप्रमाणोपन्यासे च नैमे विशेषत कृतप्रयत्ना दृश्यन्ते तथा च भाषायाश्चारुत्वस्य वर्णनशैल्या हृदयंगमत्वस्य लक्षणशैल्याश्च पाटवस्य संपादनेऽमीषां नात्यादरो दृश्यते । अष्टकषोडशकादिप्रकरणलेखने श्लोकसंख्याया कृत्रिमा मर्यादा आचारादिविषयेष्वन्तरान्तरा द्वार्थानामागमादिग्रन्थानामनुरोधेन ग्रन्थरचनायां प्रतिभाशैल्या प्रसराभावश्चात्र कदाचित्कारणत्वेन स्यातां । एतया विषयलक्षणप्रतिपादन-ग्रन्थमर्मनिष्करण-सिद्धान्तोपन्यासानामयमेव गरीयान्विशेषो यदेते भवेत् द्वेषस्पर्धामत्सरिता-

निरस्ताकारादिभावना सुदूरं निरस्य प्रतिपक्षसिद्धान्तान्स्वमनोनुकूलत्वेन प्रतिपादयन्तः सर्वेषां सर्वथा संग्रहे कृतप्रयत्ना मनसो माहात्म्यस्यौदार्यस्य च परमां काष्ठामाविष्कुर्वन्तः स्वग्रन्थेषु कामपि रमणीयतामातन्वन्ति ॥

११ एते रचिताः। तेषां तेषां ग्रन्थानां क्रमप्रतिपादको टीकाग्रन्था प्रायः प्रथमं रचिताः अनन्तरं धर्मकथा रचितास्तदनन्तरमनेकान्तजयपताकालोकतत्त्वनिर्णयाद्यः प्राधान्येन जैनसिद्धान्तप्रतिपादनपरा ग्रन्था निर्मितास्तदनन्तरं षड्दर्शनसमुच्चयशास्त्रवार्तासमुच्चयाष्टकपञ्चाशकाद्यो दर्शनग्रन्थास्तदनन्तरं च योगदर्शनप्रतिपादकौ योगबिन्दुयोगदृष्टिसमुच्चयौ रचिताविति भाति। सर्वेषामन्ते च परिणतप्रज्ञैरेभिरागमसारभूतः स्वकीयग्रन्थप्रतिपादितानां विविधानां विषयाणां संग्रहस्थानभूतश्चासौ विंशतिविंशिकानामा ग्रन्थो निरमायीति स्वमतिविभवानुसारेण सुधीभिर्मनसि विभावनीयमित्याशासे—

९८१ सदाशिव पेठ<br>पुणे शहर<br>कार्तिक शुद्ध ५, १८५४<br>३।११।१९३२ } अभ्यङ्करोपाह्ववासुदेवात्मजकाशीनाथः

---

# आदर्शपुस्तकोल्लेखसंज्ञाः



अ ' इन्दोर ' नगरे मुद्रित पुस्तकम् ।

क सुरतपत्तनस्थ–श्रीजैनआनन्दपुस्तकालयादुपलब्ध संवत् १९५४ माघ शुद्ध ६ गुरुवासरे लिखितम् ।

ख पण्डितसुखलालजीमहाशयैर्मुद्रित योगविंशिकामानमुपाध्याययशोविजयकृतटीकासहितम् ।

ग पुण्यपत्तन–राजकीयपाठशाला–मम्रहालयस्थम् ।

घ ' लिमडी ' पुरीस्थानन्दजीकल्याणजीजैनभाण्डागारादुपलब्ध संवत् १८३६ माघशुद्ध १३ भृगुवासरे राजनगरे लिखितम् ।

च राजनगर–( अमदाबाद ) स्थ–डेहलाउपाश्रयादुपलब्धम् ।

छ श्रीमता पुण्यविजयजीमहाशयाना सकाशादुपलब्ध तैरेव लिखितम् ।

ज ' पट्टण ' नगरीभाण्डागारस्थम्



# श्रीमदाचार्यहरिभद्रसूरिवर्यनिर्मिता विंशतिविंशिका



नमिऊण वीयराय सव्वन्नु तियसनाहकयपूय।
जहनायवत्थुवाइं सिद्ध सिद्धालय वीरं ॥ १ ॥
वुच्छं केइ पयत्थे लोगिगलोगुत्तरे समासेण।
लोगागमाणुसारा मदमइविबोहणट्ठाए ॥ २ ॥
सुंदरमिइ अन्नेहि वि भणिय च कय च किंचि वत्थु ति।
अन्नेहि वि भणियव्व कायव्व चेति मग्गोऽय ॥ ३ ॥
इहरा उ कुसलभणिईण चिट्ठियाण च इत्थ वुच्छेओ।
एव खलु धम्मो वि हि सव्वेण कओ ण कायव्वो ॥ ४ ॥
अन्ने आसायणाओ महाणुभावाण पुरिससीहाण।
तम्हा सत्तणुरूव पुरिसेण हिए पयइयव्व ॥ ५ ॥
तेसिं बहुमाणाओ ससत्तिओ कुसलसेवणाओ य।
जुत्तमिण आसेविय गुरुकुलपरिदीहसमयाण ॥ ६ ॥

---

नत्वा वीतराग सर्वज्ञ त्रिदशनाथकृतपूजम्।
यथाज्ञातवस्तुवादिन सिद्ध सिद्धालय वीरम् ॥ १ ॥
वक्ष्यामि कांश्चित्पदार्थांल्लौकिकलोकोत्तरान्समासेन।
लोकागमानुसारान्मन्दमतिविबोधनार्थाय ॥ २ ॥
सुन्दरमित्यन्यैरपि भणित च कृत च किंचिद्वस्त्विति।
अन्यैरपि भणितव्य कर्तव्य चेति मार्गोऽयम् ॥ ३ ॥
इतरथा तु कुशलभणितीना चेष्टिताना चात्र व्युच्छेद।
एव खलु धर्मोपि हि सर्वेण कृतो न कर्तव्य ॥ ४ ॥
अन्ये आशातना महानुभावाना पुरुषसिंहानाम्।
तस्माच्छक्त्यनुरूप पुरुषेण हिते प्रयतितव्यम् ॥ ५ ॥
तेषा बहुमानात्स्वशक्तित कुशलसेवनायाश्च।
युक्तमिदमासेवित गुरुकुलपरिदीर्घसमयानाम् ॥ ६ ॥

---

१ ग वीरनाह २ घ कय पूय ३ घ लोगागमाणुसारो ४ घ किंचि वुच्छ ति ५ ग च ज पयइसत्ते ६ अ परिदिट्ट

जत्तो उद्धारो खलु अहिगाराण सुयाओ ण उ तस्स ।
इय वुच्छेओ तद्देसदसणा कोउगपवित्ती ॥ ७ ॥
इक्को उण इह दोसो ज जायइ खलजणस्स पीड त्ति ।
तह वि पयट्टो इत्थ दट्ठु सुयणाण मइतोस ॥ ८ ॥
तत्तो वि य ज कुसल तत्तो तेर्सि पि होहिइ ण पीडा ।
सुद्धासया पवित्ती सत्थे निद्दोसिया भणिया ॥ ९ ॥
इहरा छउमत्थेण पढम न कयाइ कुसलमग्गम्मि ।
इत्थ पयट्टियव्व सम्म ति कय पसगेण ॥ १० ॥
अहिगारसूयणा खलु—लोगाणादित्तमेव बोद्धव्व ।
कुलनीइलोगधम्मा, सुद्धो वि य चरमपरियट्टो ॥ ११ ॥
तब्बीजाइक्कमो वि य, जसु पुण सम्मत्तमेव विन्नेओ ।
दाणविही य तओ खलु, परमो पूयाविही चेव ॥ १२ ॥
सावगधम्मो य तओ तप्पडिमाओ य हुति बोद्धव्वा ।

यत उद्धारः खलु अधिकाराणा श्रुतात्न तु तस्य ।
इति व्युच्छेदस्तद्देशदर्शनात्कौतुकप्रवृत्तिः ॥ ७ ॥
एकः पुनरिह दोषो यज्जायते खलजनस्य पीडेति ।
तथापि प्रवृत्तोऽत्र दृष्ट्वा सुजनानां मतितोषम् ॥ ८ ॥
ततोऽपि यत्कुशल ततस्तेषामपि भविष्यति न पीडा ।
शुद्धाशया प्रवृत्तिः शास्त्रे निर्दोषिका भणिता ॥ ९ ॥
इतरथा छद्मस्थेन प्रथम न कदाचित्कुशलमार्गे ।
इत्थ प्रवर्तितव्य सम्यगिति कृत प्रसङ्गेन ॥ १० ॥
अधिकारसूचना खलु—लोकानादित्वमेव बोद्धव्यम् ।
कुलनीतिलोकधर्मा, शुद्धोपि च चरमपरिवर्तः ॥ ११ ॥
तद्बीजादिक्रमोपि च, येषु पुनः सम्यक्त्वमेव विज्ञेयः ।
दानविधिश्च ततः खलु, परमः पूजाविधिश्चैव ॥ १२ ॥
श्रावकधर्मश्च ततस्तत्प्रतिमाश्च भवन्ति बोद्धव्याः ।

१ ज केउग २ घ लोगधम्मो ३ च घ चरिमपरियट्टो ४ अ ल पुण
५ म च बुद्धव्वा

जइधम्मो इत्तो पुण, दुविहा सिक्खा य एयस्स ॥ १३ ॥
भिक्खाइ विही सुद्धो, तयंतराया असुद्धिलिंगता ।
आलोयणाविहाणं, पच्छित्ता सुद्धिभावो य ॥ १४ ॥
तत्तो जोगविहाणं, केवलनाणं च सुपरिसुद्ध ति ।
सिद्धविभत्ती य तहा, तेसिं परमं सुहं चेव ॥ १५ ॥
एए इहाहिगारा वीसं वीसाहि चेव गाहाहिं ।
फुडवियडपयडत्था नेया पत्तेयपत्तेयं ॥ १६ ॥
एए सोऊण बुहो परिभावंतो उ तंतजुत्तीए ।
पाएण सुद्धबुद्धी जायइ सुत्तस्स जोग्ग त्ति ॥ १७ ॥
मज्झत्थयाइ नियमा सुबुद्धिजोएण अत्थियाए य ।
नज्जइ तत्तविसेसो न अन्नहा इत्थ जइयव्वं ॥ १८ ॥
गुणगुरुसेवा सम्मं विणओ तेसिं तदत्थकरणं च ।
साहूणमणाहाण य सत्ताणुरूव निओगेण ॥ १९ ॥

यतिधर्म इतः पुनर्द्विविधा शिक्षा चैतस्य ॥ १३ ॥
भिक्षाया विधिः शुद्धस्तदन्तराया अशुद्धिलिङ्गान्ता ।
आलोचनाविधानं, प्रायश्चित्ताच्छुद्धिभावश्च ॥ १४ ॥
ततो योगविधानं, केवलज्ञानं च सुपरिशुद्धमिति ।
सिद्धविभक्तिश्च तथा, तेषां परमं सुखं चैव ॥ १५ ॥
एते इहाधिकारा विंशतिविंशत्या चैव गाथाभिः ।
स्फुटविकटप्रकटार्था ज्ञेयाः प्रत्येकप्रत्येकम् ॥ १६ ॥
एतान्श्रुत्वा बुधः परिभावयस्तु तन्त्रयुक्त्या ।
प्रायेण शुद्धबुद्धिर्जायते सूत्रस्य योग्य इति ॥ १७ ॥
मध्यस्थतया नियमात्सुबुद्धियोगेनार्थितया च ।
ज्ञायते तत्त्वविशेषो नान्यथात्र यतितव्यम् ॥ १८ ॥
गुणगुरुसेवा सम्यग्विनयस्तेषां तदर्थकरणं च ।
साधूनामनाथानां च शक्त्यनुरूपं नियोगेन ॥ १९ ॥

---

१ र सुद्धो इमतरनगाया २ प च नाण सुपरिसुद्ध ३ प विभत्तीह ४ अ भ जोग त्ता

भव्वस्स चरमपरियट्टवत्तिणो पायण परं एयं।
एसो वि य लक्खिज्जइ भवविरहफलो इमेण तु ॥ २० ॥

इति प्रथमा अधिकारविंशिका समाप्ता ॥ १ ॥

पंचत्थिकायमइओ अणाइमं वट्टए इमो लोगो।
न परमपुरिसाइकओ पमाणमित्थ च वयणं तु ॥ १ ॥
धम्माधम्मागासा गइठिइअवगाहलक्खणा एए।
जीवा उवओगजुया मुत्ता पुण पुग्गला णेया ॥ २ ॥
एए अणाइनिहणा तहा तहा नियसहावओ नवर।
वट्टंति कज्जकारणभावेण भवे ण परसरूवे ॥ ३ ॥
ण वि य अभावो जायइ तस्सत्ताए य नियमविरहाओ।
ऐयमणाई एए तहा तहा परिणइसहावा ॥ ४ ॥
इत्तो उ आइमत्त तहासहावत्तकप्पणाए वि।
एसिमजुत्त, पुव्विं अभावओ भावियव्वमिणं ॥ ५ ॥

भव्यस्य चरमपरिवर्तवर्तिनः प्रायण परमेतत्।
एषोपि च लक्ष्यते भवविरहफलोनेन तु ॥ २० ॥
॥ इति प्रथमा अधिकारविंशिका समाप्ता ॥

पञ्चास्तिकायमयकोऽनादिमान्वर्ततेय लोक ।
न परमपुरुषादिकृत प्रमाणमत्र च वचन तु ॥ १ ॥
धर्माधर्माकाशा गतिस्थित्यवगाहलक्षणा एते।
जीवा उपयोगयुता मूर्ता पुन पुद्गला ज्ञेया ॥ २ ॥
एते अनादिनिधनास्तथा तथा निजस्वभावत केवलम्।
वर्तन्ते कार्यकारणभावेन भवे न परस्वरूपे ॥ ३ ॥
नापि चाभावो जायते तत्सत्तायाश्च च नियमविरहात्।
एवमनादय एते तथा तथा परिणतिस्वभावा ॥ ४ ॥
इतश्चादिमत्व तथास्वभावत्वकल्पनयापि।
एषामयुक्त पूर्वमभावतो भावयित यमिदम् ॥ ५ ॥

१ ग पोग्गला २ ग क ग तस्सत्तीए ३ घ एवमणाई

नो परमपुरिसपहवा पओयणाभावओ दलाभावा।
तत्तस्सहावयाए[1] तस्स व तेसिं अणाइत्त ॥ ६ ॥
न सदेव यऽस्स भावो को इह हेऊ तहासहावत्त।
हंताभावगयमिणं को दोसो तस्सहावत्त ॥ ७ ॥
सो भावऽभावकारणसहाव भयवं हविज्ज नेय वि।
सव्वाहिलसियसिद्धीओ[2] अन्नहा भत्तिमत्त[3] तु ॥ ८ ॥
धम्माधम्मनिमित्त नवरमिह हंत होइ एसो वि।
इहरा उ थयक्कोसाइ सव्वमेयम्मि विहल तु ॥ ९ ॥
न य तस्स वि गुणदोसा अणासय[4]निमित्तभावओ हुंति।
तंम्मयचेयण[5]कप्पो तहासहावो खु सो भयवं ॥ १० ॥
रयणाई सुहरहिया सुहाइहेऊ जहेव[6] जीवाणं।
तह धम्माइनिमित्त एसो धम्माइरहिओ वि ॥ ११ ॥

---

नो परमपुरुषप्रभवा प्रयोजनाभावतो दलाभावात्।
तत्तत्स्वभावताया तस्येव तेषामनादित्वम् ॥ ६ ॥
न सदैव चास्य भाव क इह हेतुस्तथास्वभावत्वम्।
हन्ताभावगतमिद को दोषस्तत्स्वभावत्वम् ॥ ७ ॥
स भावाभावकारणस्वभावो भगवान्भवेन्नैतदपि।
सर्वाभिलपितसिद्धयोन्यथा भक्तिमात्र तु ॥ ८ ॥
धर्माधर्मनिमित्त केवलमिह हन्त भवति एषोपि।
इतरथा तु स्तवाक्रोशादि सर्वमेतस्मिन्विफल तु ॥ ९ ॥
न च तस्यापि गुणदोषा अनाशयनिमित्तभावतो भवन्ति।
तन्मयचेतनकल्पस्तथास्वभाव खलु स भगवान् ॥ १० ॥
रत्नादय सुखरहिता सुखादिहेतवो यथैव जीवानाम्।
तथा धर्मादिनिमित्त एष धर्मादिरहितोपि ॥ ११ ॥

---

१ ध तत्तस्समहावयाए २ ज न ध सव्वाहिलिसिय ३ ध च भत्तिमत्तं तु
४ अ अण्णासय ५ ध च तम्मयचेयण ६ ध सुहाइ होइ जहेव

एसो अणाइम चिय सुद्धो य तओ अणाइसुद्धुत्ति।
जुत्तो य पवाहेण, न अन्नहा सुद्धया सम्म ॥ १२ ॥
बंधो वि हु एव चिय अणाइम होइ हंत कयगो वि।
इहरा उ अकयगत्तं निच्चत्तं चेव एयस्स ॥ १३ ॥
जह भव्वत्तमकयगं न य निच्चं एव किं न बंधोवि।
किरियाफलजोगो जं एसो ता न खलु एव ति ॥ १४ ॥
भव्वत्तं पुणमकयगमणिच्चमो चेव तहसहावाओ।
जह कयगो वि हु मुक्खो निच्चो वि य भाववइचित्तं ॥ १५ ॥
एव चेव यऽदिक्खा भवबीजं वासणा अविज्जा य।
सहजमलसद्दवच्चं वण्णिज्जइ मुक्कवाईहिं ॥ १६ ॥
एयं पुण तह कम्मेयराणुसंबंधजोगयारूवं।
एतदभावे णाय सिद्धाणाभावणागम्मं ॥ १७ ॥
इय असव्वेदाणाइयमग्गे तम आसि पयमाई वि।

एषोनादिमानेव शुद्धश्च ततोनादिशुद्ध इति।
युक्तश्च प्रवाहेण नान्यथा शुद्धता सम्यक् ॥ १२ ॥
बन्धोपि खल्वेवमेवानादिमान् भवति हन्त कृतकोपि।
इतरथा तु अकृतकत्वं नित्यत्वं चैवैतस्य ॥ १३ ॥
यथा भव्यत्वमकृतकं न च नित्यमेव किं न बन्धोपि।
क्रियाफलयोगो यदेष तस्मात् खलु एवमिति ॥ १४ ॥
भव्यत्वं पुनरकृतकमनित्यं चैव तत्स्वभावात्।
यथा कृतकोपि खलु मोक्षो नित्योपि च भाववैचित्र्यम् ॥ १५ ॥
एवमेवादीक्षा भवबीजं वासना अविद्या च।
सहजमलशब्दवाच्यं वर्ण्यते मोक्षवादिभिः ॥ १६ ॥
एतत्पुनस्तथा कर्मेतरानुसम्बन्धयोग्यतारूपम्।
एतदभावे ज्ञातं सिद्धानां भावनागम्यम् ॥ १७ ॥
इति असद्देवानादिकमग्रे तम आसीदेवमाद्यपि।

१ घ मलसद्दवच्चे २ घ च जोगद्ध। ३ घ ज भावणागम्म

मेयगविरहे वइचित्तजोगओ होइ पडिसिद्ध ॥ १८ ॥
मेयगविरहे तस्सेव तस्सऽभावत्तकप्पणमजुत्त ।
जम्हा सावहिगमिण नीई अवही य णाभावो ॥ १९ ॥
इय तन्तजुत्तिसिद्धो अणाइम एस हन्दि लोगो त्ति ।
इहरा इमस्सऽभावो पावइ परिचिंतियव्वमिण ॥ २० ॥
॥ इति अनादिविंशिका द्वितीया ॥ २ ॥

इत्थ कुलनीइधम्मा पाएण विसिट्ठलोगमहिकिच्च ।
आवेणिगाइरूवा विचित्तसत्थोइया चेव ॥ १ ॥
जे वेणिसपयाया चित्ता सत्थेसु अपडिबद्ध त्ति ।
ते तम्मज्जायाए सव्वे आवेणिया नेया ॥ २ ॥
अह सञ्झाए दीवयदाण सत्थ रविम्मि विद्धत्थे ।
सुद्धग्गिणो अदाण च तस्स अभिसत्थपडियाण ॥ ३ ॥

---

भेदकविरहे वैचित्र्ययोगतो भवति प्रतिषिद्धम् ॥ १८ ॥
भेदकविरहे तस्यैव तस्याभावत्वकल्पनमयुक्तम् ।
यस्मात्सावधिकमिद नीत्याऽवधिश्च नाभाव ॥ १९ ॥
इति तन्त्रयुक्तिसिद्धोऽनादिमानेष हन्त लोक इति ।
इतरथास्याभाव प्राप्नोति परिचिन्तयितव्यमिदम् ॥ २० ॥
॥ इत्यनादिविंशिका द्वितीया ॥

अत्र कुलनीतिधर्मा प्रायेण विशिष्टलोकमधिकृत्य ।
आवेणिकादिरूपा विचित्रशास्त्रोदिताश्चैव ॥ १ ॥
ये वेणिसप्रदायाश्चित्रा शास्त्रेष्वप्रतिबद्धा इति ।
ते तन्मर्यादया सर्व आवेणिका ज्ञेया ॥ २ ॥
यथा सध्याया दीपकदान शस्त रवौ विध्वस्ते ।
शुद्धाग्नेरदान च तस्याभिशास्त्रपतितानाम् ॥ ३ ॥

---

१ ध ज तस्स जायाए, ग तम्मज्जा

नक्खत्तमंडलस्स य पूजा नक्खत्तदेवयाण च ।
गोसे सइसरणाइ य धन्नाण वंदणा चेव ॥ ४ ॥
गिहदेवयाइसरणं वामगुट्ठयनिपीडणा चेव ।
असिलिट्ठदंसणम्मी तहा सिलिट्ठे य सिरिहत्थो ॥ ५ ॥
बालाण पुण्णनिरूवणाइ चित्तप्पहेणगाईहिं ।
सत्थतरोहिं कालाइभेयओ वयविभागेण ॥ ६ ॥
तप्परिभोगेण तहा थाणे परदाणजोगजुत्तेण ।
चित्तविणिओगविसया डिंभपरिच्छा य चित्त त्ति ॥ ७ ॥
धीयाइकोउगेहिं रइसगमसत्तमेइण ईहिं ।
भूयाण पुण्णनिरूवण च निविहप्पओगेहिं ॥ ८ ॥
भोगे भावट्ठवण भावेणाराहण च दइयस्स ।
मणुपुरिसुज्झ अणुद्धरिमतेण सीलरक्खा य ॥ ९ ॥

---

नक्षत्रमण्डलस्य च पूजा नक्षत्रदेवताना च ।
गोपे सतीस्मरणादि च धन्याना वन्दना चैव ॥ ४ ॥
गृहदेवतादिस्मरण वामाङ्गुष्ठकनिपीडना चैव ।
अश्लिष्टदर्शने तथा श्लिष्टे च श्रीहस्त ॥ ५ ॥
बालानां पण्यनिरूपणानि चित्रप्रहेणकादि

ण्हायपरिण्णाजलमुत्तपीलण वसणदसणच्चाओ ।
वेलासु अ थणणाई थीण आवेणिगो धम्मो ॥ १० ॥
सत्थभणिया य अन्ने वण्णासमधम्मभेयओ नेया ।
वण्णा उ बंभणाई तहासमा बंभचेराई ॥ ११ ॥
एए ससत्थसिद्धा धम्मा जयणाइभेयओ चित्ता ।
अब्भुदयफला सव्वे विवागविरसा य भावेण ॥ १२ ॥
पयई सावज्जा वि हु तहा वि अब्भुदयसाहणं नेया ।
जह धम्मसालिगाणं हिंसाइ तहऽत्थहेउ त्ति ॥ १३ ॥
मोहपहाणे एए वेरग्ग पि य इमेसि पाएण ।
तग्गब्भ चिय नेय मिच्छाभिनिवेसऽभावाओ ॥ १४ ॥
अन्नेसि तत्तचिंता देसाणाभोगओ य अन्नेसि ।
दीसति य जइणो वित्थ केइ सम्मुच्छिमप्पाया ॥ १५ ॥

स्नानपरिज्ञाजलमुक्तपीडन वसनदर्शनत्याग ।
वेलासु च स्तननादि स्त्रीणामावेणिको धर्म ॥ १० ॥
शास्त्रभणिताश्चान्ये वर्णाश्रमधर्मभेदतो ज्ञेया ।
वर्णास्तु ब्राह्मणादयस्तथाश्रमा ब्रह्मचर्यादय ॥ ११ ॥
एते स्वशास्त्रसिद्धा धर्मा यतनादिभेदतश्चित्रा ।
अभ्युदयफला सर्वे विपाकविरसाश्च भावेन ॥ १२ ॥
प्रकृति सावद्यापि खलु तथाप्यभ्युदयसाधन ज्ञेया ।
यथा धर्मशालिकाना हिंसादि तथार्थहेतुरिति ॥ १३ ॥
मोहप्रधाना एते वैराग्यमपि चैषा प्राय ।
तद्गर्भमेव ज्ञेय मिथ्याभिनिवेशाभावात् ॥ १४ ॥
अन्येषा तत्त्वचिन्ता देशानाभोगतश्चान्येषाम् ।
दृश्यन्ते च यतयोऽप्यत्र केचित्सम्मूर्छिमप्राया ॥ १५ ॥

---

१ अ क पुत्तपीलण, घ च ण्हायपरिन्नाजलपुत्तपीलण, ग पुन्नपीलण

निच्छयओ पुण एसो जायइ नियमेण चरमपरियट्टे ।
तहऽभव्वत्तमलक्खयभावा अच्चंतसुद्धु त्ति ॥ १ ॥
मुक्खासओ वि नन्नत्थ होइ गुरुभावमलपहावेण ।
जह गुरुवाहिविगारे न जाउ पत्थासओ सम्मं ॥ २ ॥
परियट्टा उ अणंता हुंति अणाइम्मि इत्थ संसारे ।
तप्पुग्गलाणमेव य तहा तहा हुंति गहणाओ ॥ ३ ॥
तह तग्गेज्झसहावा जह पुग्गलमो हवंति नियमेण ।
तह तग्गहणसहावो आया य तओ उ परियट्टा ॥ ४ ॥
एवं चरमोऽवेसो नीईए जुज्जई इहरहा उ ।
तत्तस्सहावक्खयवज्जिओ इमो किं न सव्वो वि[1] ॥ ५ ॥
तत्तग्गहणसहावो आयगओ इत्थ सत्थगारेहिं ।
सहजो मलु त्ति भण्णइ, भव्वत्तं तक्खओ एसो ॥ ६ ॥

निश्चयतः पुनरेष जायते नियमेन चरमपरिवर्ते ।
तथाऽभव्यत्वमलक्षयभावादत्यन्तशुद्ध इति ॥ १ ॥
मोक्षाशयोऽपि नान्यत्र भवति गुरुभावमलप्रभावेण ।
यथा गुरुव्याधिविकारे न जातु पथ्याशकः सम्यक् ॥ २ ॥
परिवर्तास्तु अनन्ता भवन्ति अनादावत्र संसारे ।
तत्पुद्गलानामेव च तथा तथा भवन्ति ग्रहणात् ॥ ३ ॥
तथा तद्ग्राह्यस्वभावा यथा पुद्गला भवन्ति नियमेन ।
तथा तद्ग्रहणस्वभाव आत्मा च ततश्च परिवर्ताः ॥ ४ ॥
एवं चरमोऽप्येष नीत्या युज्यते इतरथा तु ।
तत्तत्स्वभावक्षयवर्जितोऽयं किं न सर्वोऽपि ॥ ५ ॥
तत्तद्ग्रहणस्वभाव आत्मगतोऽत्र शास्त्रकारैः ।
सहजो मल इति भण्यते भव्यत्वं तत्क्षय एष ॥ ६ ॥

१ ग ज सुद्दु त्ति २ घ च तग्गज्झसहावा ३ ज खक्खओ

एयस्स परिक्खयओ तहा तहा हंत [1]किंचि सेसम्मि ।
जायइ चरिमो एसु त्ति ततजुत्ती पमाणमिह ॥ ७ ॥
एयम्मि स[3]हजमलभावविगमओ सुद्धधम्मसंपत्ती ।
हेयेतरातिभावे ज न मुणइ अन्नहिं जीवो ॥ ८ ॥
भमणकिरियाहियाए सत्तीए समन्निओ जहा बालो ।
पासइ थिरे वि हु चले भावे जा धरइ सा सत्ती ॥ ९ ॥
तह संसारप[4]रिब्भमणसत्तिजुत्तो वि नियमओ चेव ।
हेए वि उवाएए ता पासइ जाव सा सत्ती ॥ १० ॥
जह तस्सत्तीविगमे पासइ पढमो थिरे थिरे चेव ।
बीओ वि उवाएए तह तव्विगमे उवाएए ॥ ११ ॥
तस्सत्तीविगमो पुण जायइ कालेण चेव नियएण ।
तहऽभव्वत्ताइ तदन्नहेउकलिएण व कहिंचि ॥ १२ ॥

एतस्य परिक्षयतस्तथा तथा हन्त किंचिच्छेषे ।
जायते चरम एष इति तन्त्रयुक्ती प्रमाणमिह ॥ ७ ॥
एतस्मिन्सहजमलभावविगमतः शुद्धधर्मसंपत्तिः ।
हेयेतरादिभावान्यत्र जानात्यन्यथा जीवः ॥ ८ ॥
भ्रमणक्रियाहितया शक्त्या समन्वितो यथा बालः ।
पश्यति स्थिरानपि खलु चलान्भावान्या धरति सा शक्तिः ॥ ९ ॥
तथा संसारपरिभ्रमणशक्तियुक्तोपि नियमतश्चैव ।
हेयानप्युपादेयांस्तावत्पश्यति यावत्सा शक्तिः ॥ १० ॥
यथा तच्छक्तिविगमे पश्यति प्रथमः स्थिरान्स्थिरानेव ।
द्वितीयोप्युपादेयांस्तथा तद्विगम उपादेयान् ॥ ११ ॥
तच्छक्तिविगमः पुनर्जायते कालेनैव नियतेन ।
तथाऽभव्यतायास्तदन्यहेतुकलितेन वा कथंचित् ॥ १२ ॥

---

१ ज किंचि सेसमि २ अ ततजुत्तिप्पमाण ३ क सहजमनभावविगमओ ४ घ च परिब्भमणासत्तिजुनो

इय पाहन्न नेय इत्थ कालस्स तओ तओ चेव ।
तस्सत्तिविगमहेऊ सा वि जओ तस्सहाव त्ति ॥ १३ ॥
कालो सहाव नियई पुव्वकय पुरिस कारणेगन्ता ।
मिच्छत्त, ते चेव उ समासओ हुंति सम्मत्त ॥ १४ ॥
नायमिह जुगपत्ती समयपसिद्धा वि भावियव्व त्ति ।
सव्वेसु विसिट्ठत्त इयरेयरभावसाविक्ख ॥ १५ ॥
तह भव्वत्तक्खित्तो जह कालो तह इम ति तेण ति ।
इय अन्नुन्नाविक्ख रूव सव्वेसि हेऊण ॥ १६ ॥
न य सव्वहेउतुल्ल भव्वत्त हवि सव्वजीवाण ।
ज तेणेवक्खित्ता तो तुल्ला दसणाईया ॥ १७ ॥
न इमो इमेसि हेऊ न य णातुल्ला इमेण एय वि ।
एएसि तहा हेऊ तो तहभाव इम नेय ॥ १८ ॥

---

इति प्राधान्य ज्ञेयमित्थ कालस्य ततस्तत एव ।
तच्छक्तिविगमहेतु सापि यतस्तत्स्वभाव इति ॥ १३ ॥
काल स्वभावो नियति पूर्वकृत पुरुष कारणैकान्त ।
मिथ्यात्व, त एव तु समासतो भवन्ति सम्यक्त्वम् ॥ १४ ॥
ज्ञातमिह युगपत्ति समयप्रसिद्धाऽपि भावयितव्यमिति ।
सर्वेषु विशिष्टत्वमितरेतरभावसापेक्षम् ॥ १५ ॥
तथा भव्यत्वाक्षिप्तो यथा कालस्तथैतदिति तेनेति ।
इत्यन्योन्यापेक्ष रूप सर्वेषा हेतूनाम् ॥ १६ ॥
न च सर्वहेतुतुल्य भव्यत्व हवि सर्वजीवानाम् ।
यत्तेनैवाक्षिप्ता ततो तुल्या दर्शनादिका ॥ १७ ॥
नायमस्य हेतुर्न च नातुल्या अनेनैतदपि ।
एतेषा तथा हेतुस्ततस्तथाभावमिद ज्ञेयम् ॥ १८ ॥

---

१ घ इय पासत्त नेय २ ड तउ तओ चेव ३ क मुगापत्ती, घ जावमि मुगापत्ती ४ अ क च ज सुद्धत्त ५ ज ता तुह्वा ६ ज ना तह भाव इम ते

अचरिमपरियट्टेसु कालो भवबालकालमो भणिओ ।
चरिमो उ धम्मजुव्वणकालो तह चित्तभेओ त्ति ॥ १९ ॥
एयम्मि धम्मरागो जायइ भव्वस्स तस्सभावाओ ।
इत्तो य कीरमाणो होइ इमो हंत सुद्धु त्ति ॥ २० ॥

इति चरमपरियट्टविंशिका चतुर्थी ॥ ४ ॥

बीजाइकमेण पुणो जायइ एसुत्थ भव्वसत्ताणं ।
नियमा ण अन्नह च्चिय इट्ठफलो कप्परुक्खु व्व ॥ १ ॥
बीजं चिमस्स णेयं दट्ठूण एयकारिणो जीवे ।
बहुमाणसंगयाए सुद्धपसंसाइ करणिच्छा ॥ २ ॥
तीए चेवऽणुबंधो अकलंको अंकुरो इह णेओ ।
कट्ठं पुण विन्नेया तदुवायन्नेसणा चित्ता ॥ ३ ॥
तेसु पवित्ती य तहा चित्ता पत्ताइसरिसिगा होइ ।
तस्संपत्ती पुप्फं गुरुसंजोगाइरूवं तु ॥ ४ ॥

अचरमपरिवर्तेषु कालो भवबालकालो भणितः ।
चरमस्तु धर्मयौवनकालस्तथा चित्रभेद इति ॥ १९ ॥
एतस्मिन् धर्मरागो जायते भव्यस्य तत्स्वभावात् ।
इतश्च क्रियमाणो भवत्ययं हन्त सुष्ठु इति ॥ २० ॥

इति चरमपरिवर्तविंशिका चतुर्थी ।

बीजादिक्रमेण पुनर्जायते एषोऽत्र भव्यसत्त्वानाम् ।
नियमान्नान्यथापि खलु इष्टफलः कल्पवृक्ष इव ॥ १ ॥
बीजमप्यस्य ज्ञेयं दृष्ट्वैतत्कारिणो जीवान् ।
बहुमानसंगतया शुद्धप्रशंसया करणेच्छा ॥ २ ॥
तस्याश्चैवानुबन्धोऽकलङ्कोऽङ्कुर इह ज्ञेयः ।
काष्ठं पुनर्विज्ञेया तदुपायान्वेषणा चित्रा ॥ ३ ॥
तेषु प्रवृत्तिश्च तथा चित्रा पत्रादिसदृशिका भवति ।
तत्संपत्तिः पुष्पं गुरुसंयोगादिरूपं तु ॥ ४ ॥

१ न भवबालकालमो (धम्मरीणा) २ अ ग घ सुद्धुत्ति ३ अ क छ अन्नह वि ड ४ अ तस्संपत्ताइ पुप्फ

तत्तो सुदेसणाईहिं होइ जा भावधम्मसंपत्ती ।
तं फलमिह विन्नेयं परमफलपसाहगं नियमा ॥ ५ ॥
बीजस्स वि संपत्ती जायइ चरिमंमि चेव परियट्टे ।
अच्चंतसुंदरा जं एसा वि तओ न सेसेसु ॥ ६ ॥
न य एयंमि अणंतो जुज्जइ नेयस्स नाम कालु त्ति ।
ओसप्पिणी अणंता हुंति जओ एगपरियट्टे ॥ ७ ॥
बीजाइया य एए तहा तहा संतरेयरा नेया ।
तहभव्वत्तक्खित्ता एगंतसहावऽबाहाए ॥ ८ ॥
तहभव्वत्तं जं कालनियइपुव्वकयपुरिसकिरियाओ ।
अक्खिवइ तहसहावं ता तदधीणं तयं पि भवे ॥ ९ ॥
एवं जेणेव जहा होयव्वं तं तहेव होइ त्ति ।
न य दिव्वपुरिसगारा वि हंदि एवं विरुज्झंति ॥ १० ॥
जो दिव्वेणक्खित्तो तहा तहा हंत पुरिसगारु त्ति ।
तत्तो फलमुभयजमवि भण्णइ खलु पुरिसगाराओ ॥ ११ ॥

---

तत सुदेशनादिभिर्भवति या भावधर्मसपत्ति ।
तत्फलमिह विज्ञेय परमफलप्रसाधक नियमात् ॥ ५ ॥
बीजस्यापि सपत्तिर्जायते चरम एव परिवर्ते ।
अत्यन्तसुन्दरा यदेषापि ततो न शेषेषु ॥ ६ ॥
न चैतस्मिन्ननन्तो युज्यते ज्ञेयस्य नाम काल इति ।
अवसर्पिण्योनन्ता भवन्ति यत एकपरिवर्ते ॥ ७ ॥
बीजादिकाश्चैते तयातथा सान्तरेतरा ज्ञेया ।
तथाभव्यत्वाक्षिप्ता एकान्तस्वभावाबाधया ॥ ८ ॥
तथाभव्यत्वं यत्कालनियतिपूर्वकृतपुरुषक्रिया ।
आक्षिपति तथास्वभाव ततस्तदधीन तदपि भवेत् ॥ ९ ॥
एव येनेव यथा भवितव्य तत्तथैव भवतीति ।
न च दैवपुरुषकारावपि हन्तैव विरुध्येते ॥ १० ॥
यो दैवेनाक्षिप्तस्तथा तथा हन्त पुरुषकार इति ।
ततो फलमुभयजमपि भण्यते खलु पुरुषकारात् ॥ ११ ॥

सयरिं चउत्थस्सा वीस तह छट्ठसत्तमाणं च।
तित्तीस सागराइं पंचमगस्सावि विन्नेया ॥ ४ ॥
अट्ठण्ह पयडीणं उक्कोसठिइए वट्टमाणो उ।
जीवो न लहइ एयं जेण किलिट्ठासओ भावो ॥ ५ ॥
सत्तण्ह पयडीणं अब्भिंतरओ उ कोडिकोडीए।
पाउणइ नवरमेयं अपुव्वकरणेण कोई तु ॥ ६ ॥
करणं अहापवत्तं अपुव्वमणियट्टिमेव भव्वाणं।
इयरेसिं पढमं चिय भण्णइ करणं ति परिणामो ॥ ७ ॥
जा गंठी ता पढमं गंठिं समइच्छओ भवे बीयं।
अणियट्टीकरणं पुण सम्मत्तपुरक्खडे जीवे ॥ ८ ॥
इत्थ य परिणामो खलु जीवस्स सुहो य होइ विन्नेओ।
किं मलकलंकमुक्कं कणगं भुवि सामलं होइ ॥ ९ ॥
पयई य व कम्माणं वियाणिउं वा विवागमसुहं ति।

सप्ततिस्तु चतुर्थस्य विंशतिस्तथा षष्ठसप्तमयोश्च ।
त्रयस्त्रिंशत्सागराणि पञ्चमकस्यापि विज्ञेया ॥ ४ ॥
अष्टानां प्रकृतीनां उत्कृष्टस्थितौ वर्तमानस्तु ।
जीवो न लभते एतद् येन क्लिष्टाशयो भावः ॥ ५ ॥
सप्तानां प्रकृतीनामभ्यन्तरतस्तु कोटीकोट्या ।
प्राप्नोति केवलमेतद् अपूर्वकरणेन कोऽपि तु ॥ ६ ॥
करणं यथाप्रवृत्तं अपूर्वमनिवृत्तिरेव भव्यानाम् ।
इतरेषां प्रथममेव भण्यते करणमिति परिणामः ॥ ७ ॥
यावद्ग्रन्थिस्तावत् प्रथमं, ग्रन्थिं समतिक्रामतो भवेद् द्वितीयम् ।
अनिवृत्तिकरणं पुनः सम्यक्त्वपुरस्कृते जीवे ॥ ८ ॥
अत्र च परिणामः खलु जीवस्य शुभश्च भवति विज्ञेयः ।
किं मलकलंकमुक्तं कनकं भुवि श्यामलं भवति ? ॥ ९ ॥
प्रकृतीश्च वा कर्मणां विज्ञाय वा विपाकमशुभमिति ।

१ क चउत्थस्स २ घ च अब्भिंतर रो उ कोडीओ ३ अ सामलं, घ च सामल

अवरद्धे वि न कुप्पइ उवसमओ सव्वकाल पि ॥ १० ॥
नरविबुहेसरसुक्खं दुक्खं चिय भावओ उ मन्नतो।
संवेगओ न मुक्खं मुत्तूण किंपि पत्थेइ ॥ ११ ॥
नारयतिरियनरामरभवेसु निव्वेयओ वसइ दुक्खं।
अकयपरलोयमग्गो ममत्तविसवेगरहिओ वि ॥ १२ ॥
दट्ठूण पाणिनिवहं भीमे भवसागरम्मि दुक्खत्तं।
अविसेसओऽणुकंपं दुहा वि सामत्थओ कुणइ ॥ १३ ॥
मन्नइ तमेव सच्चं नीसंकं जं जिणेहिं पण्णत्तं।
सुहपरिणामो सव्वं कंखाइविसुत्तियारहिओ ॥ १४ ॥
एवंविहो य एसो तहा खओवसमभावओ होइ।
नियमेण खीणवाही नरु व्व तव्वेयणारहिओ ॥ १५ ॥
पढमाणुदयाभावो पयस्स जओ भवे कसायाणं।
ता कहमेसो एवं ? भन्नइ तव्विसयविक्खाए ॥ १६ ॥

---

अपराद्धेऽपि न कुप्यति उपशमात्सर्वकालमपि ॥ १० ॥
नरविबुधेश्वरसौख्यं दुःखमेव भावतस्तु मन्यमानः ।
संवेगतो न मोक्षं मुक्त्वा किमपि प्रार्थयते ॥ ११ ॥
नारकतिर्यङ्नरामरभवेषु निर्वेदाद्वसति दुःखम् ।
अकृतपरलोकमार्गो ममत्वविषवेगरहितोऽपि ॥ १२ ॥
दृष्ट्वा प्राणिनिवहं भीमे भवसागरे दुःखार्तम् ।
अविशेषतोऽनुकम्पां द्विधाऽपि सामर्थ्यतः करोति ॥ १३ ॥
मन्यते तदेव सत्यं निःशङ्कं यज्जिनैः प्रज्ञप्तम् ।
शुभपरिणामः सर्वं काङ्क्षादिविस्रोतसिकारहितः ॥ १४ ॥
एवंविधश्चैष तथा क्षयोपशमभावतो भवति ।
नियमेन क्षीणव्याधिर्नर इव तद्वेदनारहितः ॥ १५ ॥
प्रथमानामुदयाभाव एतस्य यतो भवेत्कषायाणाम् ।
तत्कथमेष एवं ? भण्यते तद्विषयापेक्षया ॥ १६ ॥

---

१ अ पुस्तके ( मुद्रितपुस्तके ) दट्ठूणेतिगाथा द्वादशी नारयेति च त्रयोदशीति व्यत्यासो दृश्यते

निच्छयसम्मत्तं वाऽहिकिच्च सुत्तभणियनिउणरूवं तु ।
एवंविहो निओगो होइ इमो एत्थ वत्थु त्ति ॥ १७ ॥
पच्छाणुपुव्विओ पुण गुणाणमेएसि होइ लाहकमो ।
पाहन्नओ उ एव विन्नेओ सिं उवन्नासो ॥ १८ ॥
एसो उ भावधम्मो धारेइ भवण्णवे निवडमाणं ।
जम्हा जीवं नियमा अन्नो उ भवंगभावेण ॥ १९ ॥
दाणाइया उ एयम्मि चेव सुद्धा उ हुंति किरियाओ ।
एयाओ वि हु जम्हा मुक्खफलाओ पराओ य ॥ २० ॥

इति सद्धर्म्मविंशिका षष्ठी ।

दाणं च होइ तिविहं नाणाभयधम्मुवग्गहकरं च ।
इत्थ पढमं पसत्थं विहिणा जुग्गाण धम्मम्मि ॥ १ ॥
सेवियगुरुकुलवासो विसुद्धवयणोऽणुमन्निओ गुरुणा ।
सव्वत्थ निच्छियमई दाया नाणस्स विन्नेओ ॥ २ ॥

---

निश्चयसम्यक्त्वं वाऽधिकृत्य सूत्रभणितनिपुणरूपं तु ।
एवंविधो नियोगो भवत्ययमत्र वाच्य इति ॥ १७ ॥
पश्चानुपूर्व्या पुनर्गुणानामेतेषां भवति लाभक्रमः ।
प्राधान्यतस्त्वेव विज्ञेय एषामुपन्यासः ॥ १८ ॥
एष तु भावधर्मो धारयति भवार्णवे निपतन्तम् ।
यस्माज्जीवं नियमादन्यस्तु भवाङ्गभावेन ॥ १९ ॥
दानादिकास्त्वेतस्मिन्नेव शुद्धास्तु भवन्ति क्रियाः ।
एता अपि खलु यस्मान्मोक्षफलाः पराश्च ॥ २० ॥

॥ इति सद्धर्मविंशिका षष्ठी ॥

दानं च भवति त्रिविधं ज्ञानाभयधर्मोपग्रहकरं च ।
अत्र प्रथमं प्रशस्तं विधिना योग्यानां धर्मे ॥ १ ॥
सेवितगुरुकुलवासो विशुद्धवचनोऽनुमतो गुरुणा ।
सर्वार्थनिश्चितमतिर्दाता ज्ञानस्य विज्ञेयः ॥ २ ॥

सुस्सूसासजुत्तो विंसेओ गाहगो वि एयस्स ।
न सिराऽभावे खणणाउ चेव कूवे जलं होइ ॥ ३ ॥
ओहेण वि उवएसो आयरिएण विभागसो देओ ।
सामाइधम्मजणओ महुरगिराए विणीयस्स ॥ ४ ॥
अविणीयमाणवंतो किलिस्सई भासई मुसं चेव ।
नाउं घंटालोहं को किर करणे पवत्तिज्जा ॥ ५ ॥
[1]विंसेयमभयदाणं परमं मणवयणकायजोगेहिं ।
जीवाणमभयकरणं सव्वेसिं सव्वहा सम्मं ॥ ६ ॥
उत्तममेयं जम्हा तम्हा णाणुत्तमो तरइ दाउं ।
अणुपालिउं य, दिन्नं पि हंति समभावदारिद्दे ॥ ७ ॥
जिणवयणनाणजोगेण तक्कुलठिईसमाग्नियण य ।
[3]विंसेयमुत्तमत्तं न अन्नहा इत्थ अहिगारे ॥ ८ ॥

शुश्रूषासंयुक्तो विंशेयो ग्राहकोऽप्येतस्य ।
न शिराभावे खननादेव कूपे जलं भवति ॥ ३ ॥
ओघेनाप्युपदेश आचार्येण विभागशो देयः ।
सामायिकधर्मजनको मधुरगिरा विनीतस्य ॥ ४ ॥
अविनीतमाज्ञापयन् क्लिश्यते भाषते मृषैव ।
ज्ञात्वा घण्टालोहं कः किल करणे प्रवर्तेत ॥ ५ ॥
विंशेयमभयदानं परमं मनोवचनकाययोगैः ।
जीवानामभयकरणं सर्वेषां सर्वथा सम्यक् ॥ ६ ॥
उत्तममेतद्यस्मात्तस्मान्नानुत्तमः शक्नोति दातुम् ।
अनुपालयितुं वा दत्तमपि हन्ति समभावदारिद्रे ॥ ७ ॥
जिनवचनज्ञानयोगेन तत्कुलस्थितिसमाश्रितेन च ।
विंशेयमुत्तमत्वं नान्यथात्राधिकारे ॥ ८ ॥

१ ग ख्न्नाण २ क विंसेय अभय, घ प विंसेय अभय ३ च प विंसेयमुत्तिमत्तं

दाऊणेय जो पुण आरम्भाइसु पवत्तए मूढो ।
भावदरिद्दो नियमा दूरे सो दाणधम्माण ॥ ९ ॥
इहपरलोगेसु भयं जेण न संजायए कयाइयवि ।
जीवाण तक्कारी जो सो दाया उ एयस्स ॥ १० ॥
इय देसओ वि दाया इमस्स एयारिसो तहिं विसए ।
इहरा दिन्नुद्दालणपायं एयस्स दाणं ति ॥ ११ ॥
नाणदयाण खंतीविरइकिरियाइं स तओ देइ ।
अन्नो दरिद्दपडिसेहवयणतुल्लो भवे दाया ॥ १२ ॥
एवमिहं पवरं सव्वेसिं चेव होइ दाणाणं ।
इत्तो उ निओगेण एयस्स वि ईसरो दाया ॥ १३ ॥
इय धम्मुवग्गहकरं दाणं असणाइगोयरं तं च ।
पत्थमिव अन्नकाले य रोगिणो उत्तमं नेयं ॥ १४ ॥

दत्त्वैतत् पुनरारम्भादिषु प्रवर्तते मूढः ।
भावदरिद्रो नियमाद् दूरे स दानधर्माणाम् ॥ ९ ॥
इहपरलोकेषु भयं येन न संजायते कदाचिदपि ।
जीवानां तत्कारी यः स दाता त्वेतस्य ॥ १० ॥
इति देशतोऽपि दाताऽस्यैतादृशस्तस्मिन्विषये ।
इतरथा दत्तोद्दालनप्रायमेतस्य दानमिति ॥ ११ ॥
ज्ञानदययोः क्षान्तिविरतिक्रियया ततः स ददाति ।
अन्यो दरिद्रप्रतिषेधवचनतुल्यो भवेद्दाता ॥ १२ ॥
एवमिहैतत्प्रवरं सर्वेषामेव भवति दानानाम् ।
इतस्तु नियोगेन एतस्यापीश्वरो दाता ॥ १३ ॥
इति धर्मोपग्रहकरं दानमशनादिगोचरं तच्च ।
पथ्यमिवान्नकाले च रोगिण उत्तमं ज्ञेयम् ॥ १४ ॥

---

१ क पवत्तए इत्यो २ क पयाइ वि ३ क °न्नुद्दालण; घ दिन्नुद्दालण; च ज दिन्नुद्दालण ४ घ च मतओ देइ ५ क असणाइगोयरं ज च, ६ ज आरोगिणो

सद्धासक्कारजुयं सकमेण तहोचियम्मि कालम्मि ।
अन्नाणुवघाएण वयणा एव सुपरिसुद्ध ॥ १५ ॥
गुरुणाऽणुन्नायभरो नाओवज्जियधणो य एयस्स ।
दाया अट्ठत्थपरियणवग्गो सम्मं दयालू य ॥ १६ ॥
अणुकंपादाणं पि य अणुकंपागोयरेसु सत्तेसु ।
जायइ धम्मोवग्गहहेऊ करुणापहाणस्स ॥ १७ ॥
ता एयं पि पसत्थं तित्थयरेणावि भयवया गिहिणा ।
सयमाइन्नं दियदेवदव्वसदाणेण गिहिणो वि ॥ १८ ॥
धम्मस्साइपयमिणं जम्हा सीलं इमस्स पज्जंते ।
तव्विरयस्सावि जओ नियमा सनिवेयणा गुरुणो ॥ १९ ॥
तम्हा सत्तऽणुरूवं अणुकंपासंगएण भव्वेण ।
अणुचिट्ठियव्वमेयं इत्तो च्चिय सेसगुणसिद्धी ॥ २० ॥
इति दानविंशिका सत्तमी ॥

---

श्रद्धासत्कारयुतं सक्रमेण तथोचिते काले ।
अन्यानुपघातेन वचनादेव सुपरिशुद्धम् ॥ १५ ॥
गुरुणाऽनुज्ञातभरो न्यायोपार्जितधनश्चैतस्य ।
दाता अष्टार्थपरिजनवर्गः सम्यग् दयालुश्च ॥ १६ ॥
अनुकम्पादानमपि चानुकम्पागोचरेषु सत्त्वेषु ।
जायते धर्मोपग्रहहेतुः करुणाप्रधानस्य ॥ १७ ॥
तदेतदपि प्रशस्तं तीर्थकरेणापि भगवता गृहिणा ।
स्वयमाचीर्णं द्विजदेवद्रव्यदानेन गृहिणोऽपि ॥ १८ ॥
धर्मस्यादिपदमिदं यस्माच्छीलमस्य पर्यन्ते ।
तद्विरतस्यापि यतो नियमात्सनिवेदनाद् गुरौ ॥ १९ ॥
तस्माच्छक्त्यनुरूपमनुकम्पासंगतेन भव्येन ।
अनुष्ठातव्यमेतदित एव शेषगुणसिद्धिः ॥ २० ॥
॥ इति दानविंशिका सप्तमी ॥

---

१ न अन्नानुव  २ घ च दाणेणगिहिणा वि  ३ घ न, तस्सेवणा

पूया देवस्स दुहा विन्नेया दव्वभावभेएणं ।
इयरेयरजुत्ता वि हु तत्तेण पहाणगुणभावा ॥ १ ॥
पढमा गिहिणो सा वि य तहा तहा भावभेयओ तिविहा ।
कायवयमणविसुद्धी सम्भूओगरणपरिभेया ॥ २ ॥
सव्वगुणाहिगविसया नियमुत्तमवत्थुदाणपरिओसा ।
कायकिरियापहाणा समतभद्दा पढमपूया ॥ ३ ॥
बीया उ सव्वमंगलनामा वायकिरियापहाणेसा ।
पुव्वुत्तविसयवत्थुसु ओचित्ताणयणभेएण ॥ ४ ॥
तइया परतत्तगया सव्वुत्तमवत्थुमाणसनिओगा ।
सुद्धमणजोगसारा विन्नेया सव्वसिद्धिफला ॥ ५ ॥
पढमावंचकजोगा सम्मद्दिट्ठिस्स होइ पढम त्ति ।
इयरेयरजोगेण उत्तरगुणधारिणो नेया ॥ ६ ॥

---

पूजा देवस्य द्विधा विज्ञेया द्रव्यभावभेदेन ।
इतरेतरयुक्तापि खलु तत्त्वेन प्रधानगुणभावा ॥ १ ॥
प्रथमा गृहिणः सापि च तथा तथा भावभेदतस्त्रिविधा ।
कायवचोमनोविशुद्धिः सभूतोपकरणपरिभेदा ॥ २ ॥
सर्वगुणाधिकविषया नियमोत्तमवस्तुदानपरितोषा ।
कायक्रियाप्रधाना समन्तभद्रा प्रथमपूजा ॥ ३ ॥
द्वितीया तु सर्वमङ्गलनामा वाक्क्रियाप्रधानैषा ।
पूर्वोक्तविषयवस्तुषु औचित्यानयनभेदेन ॥ ४ ॥
तृतीया परतत्त्वगता सर्वोत्तमवस्तुमानसनियोगा ।
शुद्धमनोयोगसारा विज्ञेया सर्वसिद्धिफला ॥ ५ ॥
प्रथमावञ्चकयोगात् सम्यग्दृष्टेर्भवति प्रथमेति ।
इतरेतरयोगेण उत्तरगुणधारिणो ज्ञेया ॥ ६ ॥

---

१ घ जुत्तो वि हु २ अ पन्मगिहिणो ३ क घ च वत्थदाण

तइया तइयावंचकजोगेण परमसावगस्सेव ।
जोगा य समाहीहिं सा हुज्जुगकिरियफलकरणा ॥ ७ ॥
पढमकरणभेएण गयासन्नस्स धम्ममित्तफला ।
सा हुज्जुगाइभावो जायइ तह नाणुबन्धुत्ति ॥ ८ ॥
भवठिइभंगो एसो तह य महापहविसोहणो परमो ।
नियविरियसमुल्लासो जायइ सपत्तवीयस्स ॥ ९ ॥
सलग्गमाणसमओ धम्मट्ठाणं पि बिंति समयण्णू ।
अवगारिणो वि इत्थट्ठसाहणाओ य सम्म त्ति ॥ १० ॥
पंचट्ठसयभेओवयारजुत्ता य होइ एस त्ति ।
जिणचउवीसाजोगोवयारसंपत्तिरूवा य ॥ ११ ॥
सुद्धं चेव निमित्तं दव्वं भावेण सोहियव्वं ति ।
इय एगंतविसुद्धा जायइ एसा तदिट्ठफला ॥ १२ ॥

---

तृतीया तृतीयावंचकयोगेन परमश्रावकस्येयम् ।
योगाच्च समाधिभिः सा खलु ऋजुकक्रियाफलकरणात् ॥ ७ ॥
प्रथमकरणभेदेन ग्रन्थ्यासन्नस्य धर्ममात्रफला ।
सा हि ऋजुकादिभावो जायते तथा नानुबन्ध इति ॥ ८ ॥
भवस्थितिभङ्ग एष तथा च महापथविशोधनः परमः ।
निजवीर्यसमुल्लासो जायते सप्राप्तबीजस्य ॥ ९ ॥
सलग्नमानसमको धर्मस्थानमपि ब्रुवन्ति समयज्ञाः ।
अपकारिणोऽप्यत्रार्थसाधनाच्च सम्यगिति ॥ १० ॥
पञ्चाष्टशतभेदोपचारयुक्ता च भवति एषेति ।
जिनचतुर्विंशिकायोगोपचारसंपत्तिरूपा च ॥ ११ ॥
शुद्धमेव निमित्तं द्रव्यं भावेन शोधयितव्यमिति ।
इत्येकान्तविशुद्धा जायते एषा तदिष्टफला ॥ १२ ॥

---

१ च सा हुज्जुगकिरिय　२ क घ च सा हुज्जगाइ, ग हुज्जगाइ, स हुज्जुगाइ　३ क अणगारिणो वि ( हरितालेन ' अगारिणो ' इति शुद्धीकृत )　४ क घ च जुत्तो　५ अ क विसुद्धो

सयकारियाइ एसा जायइ ठवणाइ बहुफला केइ ।
गुरुकारियाइ अन्ने विसिट्ठविहिकारियाए य ॥ १३ ॥
थंडिले वि य एसा मणठवणाए पसत्थिगा चेव ।
आगासगोमयाईहिं इत्थमुलेवणाइ हियं ॥ १४ ॥
उवयारगा इह सोवओगसाहारणाण इट्ठफला ।
किंचि विसेसेण तओ सव्वे ते विभइयव्व त्ति ॥ १५ ॥
एव कुणमाणाण पया दुरियक्खओ इह जम्मे ।
परलोगम्मि य गोरवभोगा परमं च निव्वाणं ॥ १६ ॥
इक्कं पि उदगबिंदू जह पक्खित्तं महासमुद्दम्मि ।
जायइ अक्खयमेयं पूया वि जिणेसु विन्नेया ॥ १७ ॥
अक्खयभावे भावो मिलिओ तब्भावसाहगो नियमा ।
न हु तंब रसविद्धं पुणो वि तंबत्तणमुवेइ ॥ १८ ॥
तम्हा जिणाण पूया बुहेण सव्वायरेण कायव्वा ।
परमं तरंडमेसा जम्हा संसारजलहिम्मि ॥ १९ ॥

---

स्वयकारितयैषा जायते स्थापनया बहुफला केचित् ।
गुरुकारितया अन्ये विशिष्टविधिकारितया च ॥ १३ ॥
स्थण्डिलेऽप्येषा मनःस्थापनया प्रशस्तिका चैव ।
आकाशगोमयादिभिरत्रोपलेपनादि हितम् ॥ १४ ॥
उपचाराद्वा इह सोपयोगसाधारणानामिष्टफला ।
किंचिद्विशेषेण ततः सर्वे ते विभाजयितव्या इति ॥ १५ ॥
एवं कुर्वतामेता दुरितक्षय इह जन्मनि ।
परलोके च गौरवभोगाः परमं च निर्वाणम् ॥ १६ ॥
एकमप्युदकबिन्दुं यथा प्रक्षिप्त महासमुद्रे ।
आयतेऽक्षयमेव पूजापि जिनेषु विज्ञेया ॥ १७ ॥
अक्षयभावे भावो मिलितस्तद्भावसाधको नियमात् ।
न हि ताम्रं रसविद्धं पुनरपि ताम्रत्वमुपैति ॥ १८ ॥
तस्माज्जिनानां पूजा बुधेन सर्वादरेण कर्तव्या ।
परमं तरण्डमेषा यस्मात्संसारजलधौ ॥ १९ ॥

एवमिह दव्वपूया लेसुद्देसेण दंसिया समया ।
इयरा जईण पाओ जोगहिगारे तयं वुच्छं ॥ २० ॥

इति पूजाविधिविंशिका अष्टमी ॥ ८ ॥

धम्मोवग्गहदाणाइसंगओ सावगो परो होइ ।
भावेण सुद्धचित्तो निच्चं जिणवयणसवणरई ॥ १ ॥
मग्गणुसारी सड्ढो पन्नवणिज्जो कियापरो चेव ।
गुणरागी सक्कारंभसंगओ देसचारित्ती ॥ २ ॥
पंच य अणुव्वयाइं गुणव्वयाइं च हुंति तिन्नेव ।
सिक्खावयाइं चउरो सावगधम्मो दुवालसहा ॥ ३ ॥
एसो य सुप्पसिद्धो सअइयारेहिं इत्थ तंतम्मि ।
कुसलपरिणामरूवो नवरं सइ अंतरा नेओ ॥ ४ ॥
सम्मा पलियपुहुत्तेऽवगए कम्माण एस होइ त्ति ।
सो वि खलु अउगमो इह विहिगहणाईहिं होइ जहा ॥ ५ ॥

एवमिह द्रव्यपूजा लेशोद्देशेन दर्शिता समयात् ।
इतरा यतीनां प्रायो योगाधिकारे तद्वक्ष्यामि ॥ २० ॥

॥ इति पूजाविधिविंशिका अष्टमी ॥

धर्मोपग्रहदानादिसंगतः श्रावकः परो भवति ।
भावेन शुद्धचित्तो नित्यं जिनवचनश्रवणरतिः ॥ १ ॥
मार्गानुसारी श्राद्धः प्रज्ञापनीयः क्रियापरश्चैव ।
गुणरागी सत्कारम्भसंगतो देशचारित्री ॥ २ ॥
पञ्च चाणुव्रतानि गुणव्रतानि च भवन्ति त्रीण्येव ।
शिक्षाव्रतानि चत्वारि श्रावकधर्मो द्वादशधा ॥ ३ ॥
एष च सुप्रसिद्धः सातिचारोऽत्र तन्त्रे ।
कुशलपरिणामरूपः केवलं सदाऽन्तरो ज्ञेयः ॥ ४ ॥
सम्यक्पल्यपृथक्त्वेऽपगते कर्मणामेष भवतीति ।
सोऽपि खल्वागम इह विधिग्रहणादिभिर्भवति तथा ॥ ५ ॥

१ प सइअंतरा २ प ढ, फ, ब धम्मावग्गह ३ अ पुहत्त, ४ प होइ तह

आउयपरिहाणीए असमंजसचिट्ठियाण व विवागे।
खणलाभदीवणाए धम्मगुणेसु च विविहेसु ॥ १८ ॥
बाहगदोसविवक्खे धम्मायरिए य उज्जयविहारे।
एमाइचित्तनासो संवेगरसायणं देय ॥ १९ ॥
गोसे भणिओ य विही इय अणवरयं तु चिट्ठमाणस्स।
पडिमाकमेण जायइ संपुण्णो चरणपरिणामो ॥ २० ॥

इति श्रावकधर्मविंशिका नवमी ॥ ९ ॥

दंसण वय सामाइय पोसह पडिमा अबंभ सच्चित्ते।
आरंभ पेस उद्दिट्ठवज्जए समणभूए य ॥ १ ॥
एया खलु इक्कारस गुणठाणगभेयओ मुणेयव्वा।
समणोवासगपडिमा वज्झाणुट्ठाणलिंगेहिं ॥ २ ॥
सुस्सूसाई जम्हा दंसणपमुहाण कज्जसूयग त्ति।
कायकिरियाइ सम्मं लक्खिज्जइ ओहओ पडिमा ॥ ३ ॥

आयुःपरिहाणौ असमञ्जसचेष्टितानां वा विपाके।
क्षणलाभदीपनाया धर्मगुणेषु च विविधेषु ॥ १८ ॥
बाधकदोषविपक्षे धर्माचार्ये चोद्यतविहारे।
एवमादिचित्तन्यासः संवेगरसायनं ददाति ॥ १९ ॥
गोसे भणितश्च विधिरित्यनवरतं तु चेष्टमानस्य।
प्रतिमाक्रमेण जायते संपूर्णश्चरणपरिणामः ॥ २० ॥

॥ इति श्रावकधर्मविंशिका नवमी ॥

दर्शनव्रतसामायिकपोषधप्रतिमा अब्रह्मसचित्ते।
आरम्भप्रेष्योद्दिष्टवर्जकः श्रमणभूतं च ॥ १ ॥
एता खल्वेकादश गुणस्थानकभेदतो ज्ञातव्या।
श्रमणोपासकप्रतिमा बाह्यानुष्ठानलिङ्गैः ॥ २ ॥
शुश्रूषादिर्यस्माद्दर्शनप्रमुखानां कार्यसूचका इति।
कायक्रियया सम्यग्लक्ष्यत ओघतो प्रतिमा ॥ ३ ॥

१ वाहग　२ भ ग घ च उज्जुय　३ घ च रसायण देइ　४ घ

सुस्सूस धम्मराओ गुरुदेवाण जहासमाहीए।
वेयावच्चे नियमो दंसणपडिमा भवे एसा ॥ ४ ॥
पंचाणुव्वयधारित्तमणइयार वएसु पडिबंधो।
वयणा तदणइयारा वयपडिमा सुप्पसिद्ध त्ति ॥ ५ ॥
तह अत्तवीरिउल्लासजोगओ रयतसुद्धिदित्तिसमं।
सामाइयकरणमसइ सम्म सामाइयप्पडिमा ॥ ६ ॥
पोसहकिरियाकरणं पव्वेसु तहा तहा सुपरिसुद्धं।
जइभावभावसाहगमणघ तह पोसहप्पडिमा ॥ ७ ॥
पव्वेसु चेव राइं असिणाणाइकिरियासमाजुत्तो।
मासपणगावहिं तहा पडिमाकरणं तु तप्पडिमा ॥ ८ ॥
असिणाण वियडभोई मउलियडो रत्तिबंभयारी य।
पडिवक्खमंतजावाइसंगओ चेव सा किरिया ॥ ९ ॥

शुश्रूषा धर्मरागो गुरुदेवानां यथासमाधि।
वैयावृत्ये नियमो दर्शनप्रतिमा भवेदेषा ॥ ४ ॥
पञ्चाणुव्रतधारित्वमनतिचारं व्रतेषु प्रतिबन्धः।
वचनात्तदनतिचाराद् व्रतप्रतिमा सुप्रसिद्धेति ॥ ५ ॥
तथात्मवीर्योल्लासयोगतो रजतशुद्धिदीप्तिसमम्।
सामायिककरणमसकृत्सम्यक्सामायिकप्रतिमा ॥ ६ ॥
पोषधक्रियाकरणं पर्वसु तथा तथा सुपरिशुद्धम्।
यतिभावभावसाधकमनघं तथा पोषधप्रतिमा ॥ ७ ॥
पर्वसु चैव रात्रावस्नानादिक्रियासमायुक्तः।
मासपञ्चकावधि तथा प्रतिमाकरणं तु तत्प्रतिमा ॥ ८ ॥
अस्नानविकृतभोजी मौलिकृतो रात्रिब्रह्मचारी च।
प्रतिपक्षमन्त्रजापादिसंगतश्चैव सा क्रिया ॥ ९ ॥

---

१ क घ समाहीय　२ घ ज तदणइयारा　३ अ मसइ
४ अ किरियाकरण पचसु पव्वेसु तहा सुपरिसुद्धं, ॥ च पव्वेसु तहा सुपरि
५ क घ च जइभवभावपसाहग

एवं किरियाजुत्ताऽबंभं वज्जइ नवरं राइं पि ।
छम्मासावहिं नियमा एसा उ अबंभपडिमत्ति ॥ १० ॥
जावज्जीवाए वि हु एसाऽबंभस्स वज्जणा होइ ।
एवं चिय जं चित्तो सावगधम्मो बहुपगारो ॥ ११ ॥
एवंविहो उ नवरं सच्चित्तं पि परिवज्जए सव्वं ।
सत्त य मासे नियमा फासुयभोगेण तप्पडिमा ॥ १२ ॥
जावज्जीवाए वि हु एसा सच्चित्तवज्जणा होइ ।
एवं चिय जं चित्तो सावगधम्मो बहुपगारो ॥ १३ ॥
एवं चिय आरम्भं वज्जइ सावज्जमट्ठमासं जा ।
तप्पडिमा पेसेहिं वि अप्पं कारेइ उवउत्तो ॥ १४ ॥
तेहिं पि न कारेई नवमासे जाव पेसपडिम त्ति ।
पुव्वोइया उ किरिया सव्वा एयस्स सविसेसा ॥ १५ ॥
उद्दिट्ठाहाराईण वज्जणं इत्थ होइ तप्पडिमा ।
दसमासावहि सज्झायझाणजोगप्पहाणस्स ॥ १६ ॥

एवंक्रियायुक्तोऽब्रह्म वर्जयति केवलं रात्रावपि ।
षण्मासावधि नियमादेषा त्वब्रह्मप्रतिमेति ॥ १० ॥
यावज्जीवमपि खल्वेषाऽब्रह्मणो वर्जनाद्भवति ।
एवमेव यच्चित्रः श्रावकधर्मो बहुप्रकारः ॥ ११ ॥
एवंविधस्तु केवलं सचित्तमपि परिवर्जयति सर्वम् ।
सप्त च मासान्नियमात्प्रासुकभोगेन तत्प्रतिमा ॥ १२ ॥
यावज्जीवमपि खल्वेषा सचित्तवर्जनाद्भवति ।
एवमेव यच्चित्रः श्रावकधर्मो बहुप्रकारः ॥ १३ ॥
एवमेवारम्भं वर्जयति सावद्यमष्टमासं यावत् ।
तत्प्रतिमा प्रेष्यैरप्यल्पं कारयत्युपयुक्तः ॥ १४ ॥
तैरपि न कारयति नवमासान्यावत्प्रेष्यप्रतिमेति ।
पूर्वोदिता तु क्रिया सर्वैतस्याः सविशेषा ॥ १५ ॥
उद्दिष्टाहारादीनां वर्जनमत्र भवति तत्प्रतिमा ।
दशमासावधि स्वाध्यायध्यानयोगप्रधानस्य ॥ १६ ॥

१ घ सव्वोइयस्स

इक्कारस मासे जाव समणभूयपडिमा उ चरिम त्ति ।
अणुचरइ साहुकिरियं इत्थ इमो अविगलं पायं ॥ १७ ॥
आसेविऊण एया कोई पव्वयइ तह गिही होइ ।
तब्भावभेयओ च्चिय विसुद्धिसंकेसभेएण ॥ १८ ॥
एया उ जहुत्तरमो असरायकम्मक्खओवसमभावा ।
हुंति पडिमा पसत्था विसोहिकरणाणि जीवस्स ॥ १९ ॥
आसेविऊण एया भावेण निओगओ जई होइ ।
जं उवरि सव्वविरई भावेण देसविरई उ ॥ २० ॥

इति श्रावकप्रतिमाविंशिका दशमी ॥ १० ॥

नमिऊण खीणदोसं गुणरयणनिहिं जिणं महावीरं ।
संखेवेण महत्थं जइधम्मं संपवक्खामि ॥ १ ॥
खंती य मद्दवज्जव मुत्ती तव संजमे य बोद्धव्वे ।
सच्चं सोयं आकिंचणं च बंभं च जइधम्मो ॥ २ ॥

एकादश मासान्यावत् श्रमणभूतप्रतिमा तु चरमेति ।
अनुचरति साधुक्रियामत्रायमविकलं प्रायः ॥ १७ ॥
आसेव्यैता कोऽपि प्रव्रजति तथा गृही भवति ।
तद्भावभेदत एव विशुद्धिसंक्लेशभेदेन ॥ १८ ॥
एतास्तु यथोत्तरमसरायकर्मक्षयोपशमभावात् ।
भवन्ति प्रतिमाः प्रशस्ता विशोधिकरणानि जीवस्य ॥ १९ ॥
आसेव्यैता भावेन नियोगतो यती भवति ।
यदुपरि सर्वविरतिर्भावेन देशविरतिस्तु । २० ॥

॥ इति श्रावकप्रतिमाविंशिका दशमी ॥

नत्वा क्षीणदोषं गुणरत्ननिधिं जिनं महावीरम् ।
संक्षेपेण महार्थं यतिधर्मं संप्रवक्ष्यामि ॥ १ ॥
क्षान्तिश्च मार्दवार्जवमुक्तयस्तपस्संयमो च बोद्धव्या ।
सत्यं शौचमाकिंचनं च ब्रह्म च यतिधर्मः ॥ २ ॥

---

क भेयओ विय २ अ घ च विरइओ ३ अ क च सपवक्खामि
३

उवगारवगारिविवागवयणधम्मुत्तरा भवे खंती ।
सावेक्खा आइदुगि लोगिगमियरं दुग जइणो ॥ ३ ॥
बारसविहे कसाए खविए उवसामिए व जोगेहिं ।
जं जायइ जइधम्मो ता चरिमं तत्थ खंतिदुग ॥ ४ ॥
सव्वे य अइयारा जं संजलणाणमुदयओ हुंति ।
ईसिंजलणा य एए कुओवगाराइविक्खेह ॥ ५ ॥
छट्ठे उण[1] गुणठाणे जइधम्मो दुग्गलंघणं तह य ।
भणिय[2] भवाडवीए न लोगचिंता तओ इत्थं ॥ ६ ॥
तम्हा नियमेण चिय जइणो सव्वासवा नियत्तस्स ।
पढममिह वयणखंती पच्छा पुण धम्मखंति त्ति ॥ ७ ॥
एमेवऽज्जवमद्दवमुत्तीओ हुंति पंचभेयाओ ।
पुव्वोइयनाएण जइणो इत्थ वि चरमदुगं ॥ ८ ॥

---

उपकार्यपकारिविपाकवचनधर्मोत्तरा भवेत् क्षान्तिः ।
सापेक्षमादिद्विकं लौकिकमितरद् द्विकं यतेः ॥ ३ ॥
द्वादशविधे कषाये क्षपित उपशामिते च योगैः ।
यज्जायते यतिधर्मः तच्चरमं तत्र क्षान्तिद्विकम् ॥ ४ ॥
सर्वे चातिचारा यत्संज्वलनानामुदयतो भवन्ति ।
ईषज्ज्वलनाश्चैते कृतोपकाराद्यपेक्षेह ॥ ५ ॥
षष्ठे पुनर्गुणस्थाने यतिधर्मो दुर्गलङ्घनं तथा ।
भणितं भवाटव्यां न लोकचिन्ता ततोऽत्र ॥ ६ ॥
तस्मान्नियमेनैव यतेः सर्वाश्रवान्निवृत्तस्य ।
प्रथममिह वचनक्षान्तिः पश्चात् पुनर्धर्मक्षान्तिरिति ॥ ७ ॥
एवमेवार्जवमार्दवमुक्तयो भवन्ति पञ्चभेदाः ।
पूर्वोदितन्यायेन यतेरत्रापि चरमद्विकम् ॥ ८ ॥

---

१ अ छट्ठे उ गुणट्ठाणे   २ प भणिय च

इहपरलोगाइणविक्खं जमणसणाइ चित्तणुट्ठाणं ।
तं सुद्धनिज्जराफलमित्थ तवो होइ नायव्वो ॥ ९ ॥
आसवदारनिरोहो जमिंदियकसायदंडनिग्गहओ ।
पेहातिजोगकरणं तं सव्वं संजमो नेओ ॥ १० ॥
गुरुसुत्ताणुन्नायं जं हियमियभासणं ससमयम्मि ।
अपरोवतावमणघं तं सच्चं निच्छियं जइणो ॥ ११ ॥
आलोयणाइदसविहजलओ पावमलखालणं विहिणा ।
जं दव्वसोयजुत्तं तं सोयं जइजणपसत्थं ॥ १२ ॥
पक्खीए उवमाए जं धम्मोवगरणाइरेगेणं ।
वत्थुस्सागहणं खलु तं आकिंचन्नमिह भणियं ॥ १३ ॥
मेहुणसन्नाविजएण पंचपरियारणापरिच्चाओ ।
बंभे भणगुत्ताए जो सो बंभं सुपरिसुद्धं ॥ १४ ॥

इहपरलोकाद्यनपेक्षं यदनशनादि चित्रानुष्ठानम् ।
तच्च शुद्धनिर्जराफलमत्र तपो भवति ज्ञातव्यम् ॥ ९ ॥
आस्रवद्वारनिरोधो यदिन्द्रियकषायदण्डनिग्रहतः ।
प्रेक्षादियोगकरणं तत्सर्वं संयमो ज्ञेयः ॥ १० ॥
गुरुसूत्रानुज्ञातं यद्धितमितभाषणं स्वसमये ।
अपरोपतापमनघं तत्सर्वं निश्चितं यतेः ॥ ११ ॥
आलोचनादिदशविधजलतः पापमलक्षालनं विधिना ।
यद् द्रव्यशौचयुक्तं तच्छौचं यतिजनप्रशस्तम् ॥ १२ ॥
पक्षिण उपमया यद्धर्मोपकरणातिरेकेण ।
वस्तुनोऽग्रहणं खलु तदाकिञ्चन्यमिह भणितम् ॥ १३ ॥
मैथुनसंज्ञाविजयेन पञ्चपरिचारणापरित्यागः ।
ब्रह्माणि मनोगुप्त्या यः स ब्रह्म सुपरिशुद्धम् ॥ १४ ॥

---

१ क च इहलोगाइण, ग घ, ज, इहलोगाइसणविक्खं २ घ पेहेतिजोग
३ ग, ज तावोवरमणमणघं, घ तावोवसमणमणघं ४ क घ च पक्खीउवमाए ।
५ क च ज धम्मोवगरणाइरेगेणं । घ ज धम्मोवगरणाइ ६ ग ज वज्जस्सा-
गहणं । घ दव्वस्सागहणं ७ क घ च पवियारणा ८ घ मणाविसिए

